मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधादित्यनर्थहेतुत्वस्मरणात् ॥

तथाच तैत्तिरीयास्त्वष्टा हतपुत्र इत्यनुवाके इन्द्रस्य शत्रुं शातयितारं पुत्रमिच्छन् त्वष्टा स्वाहेन्द्रशत्रुर्वर्द्धस्वेति मन्त्रे इन्द्रशत्रुपदमन्त्योदात्तं न प्रयुक्तवान् । किन्तु मौढ्यादुदात्तमेव युक्तं तेनेन्द्र एव तत्पुत्रनाशकोऽभूत् इत्यामनन्ति । तस्माद्भाषामन्त्राणां शबरादिसिद्धवचस्त्वादेव वीर्य्यवत्त्वम् । न वेदमूलकत्वसिद्धिः । तेष्वपाठात् । किञ्च युक्तवर्णास्तत्तत्सिद्धवचनात् भाषादिबीजभावेन संहता आवर्त्त्यमानाः सन्तस्तद्बीजार्थभूतां देवतामभिमुखीकुर्व्वन्तीति । अशक्तास्तु संख्यामन्त्रवाचिनः । न किञ्चित्तमभिमुखीकर्त्तुं शक्नुवन्ति । तेषां तद्वाचकत्वात् । तस्मादवैदिकत्वादवेदमूलत्वात् अनर्थकत्वाच्च न व्याख्येयान्यङ्कयन्त्राणीति प्राप्ते ब्रूमः । न तावन्मन्त्राणां चतुर्दशविद्यास्थानबहिर्भूतत्वमस्ति पुराणपदेनैव भारतादीतिहासानामिव तेषामपि संग्रहात् । तेन तद्वदेवैषां श्रुतिमूलकत्वेन प्रामाण्यम् । सर्व्वेश्वरप्रणीतत्वेन भगवद्गीतादिवदभ्यर्हितत्वञ्च । नापि तद्गतानां मन्त्राणां पौराणमन्त्राणामिव वैदिकत्वमस्ति । शाबराजादिविद्यानां प्रत्यक्षेण श्रुतिष्वेवोपलभ्यमानत्वात् । दर्शयन्ति चागमविदः श्रुतिष्वेव मन्त्राणामुद्धारम् । श्रीमदनन्तभागवते यन्त्ररामायणे चास्माभिरपि कृष्णषडक्षर-रामषडक्षरयोरुद्धारो दर्शितो द्वाशतश्लोकेषु । तस्मान्मन्त्राणां वेदमूलत्वं तन्त्रत्यमन्त्राणां वैदिकत्वञ्च सिद्धम् । एवं भाषामन्त्राणां अक्षरानुपूर्व्व्या अवैदिकत्वेऽपि तदर्थानां वैदिकत्वादेव वीर्य्यवत्त्वम् । यथा व्यासादिप्रणीतानां विष्णुसहस्रनामस्तोत्रादीनाम् । अवैदिकस्य मन्त्रतन्त्रादेरदृष्टद्वारेण सर्व्वथाप्यर्थसाधकत्वसम्भवात् । सम्भवति च व्यासशबरादीनां संस्कृतभाषया देशभाषया वा वेदार्थग्रन्थनसामर्थ्यम् । तपःप्रभावनिबन्धनञ्च तद्ग्रथितायाः वर्णानुपूर्व्व्या अवैदिकत्वेऽपि तदर्थानां वैदिकत्वादेव वीर्य्यवत्त्वगतिकृतत्वमवार्थकारित्वम् । (?) तस्मात् सिद्धं पौराणमन्त्राणां भाषामन्त्राणाञ्च वैदिकत्वम् । आनुपूर्व्वीभेदाच्च सर्व्वेषां वर्णानामनुलोमप्रतिलोमजातानाञ्च यथासम्भवमेषामुद्धारणेऽधिकार इति । न किञ्चिदवद्यम् । यत्तु अशक्तवाचिनो कान (?) किञ्चित्तत्त्वमभिधातुं सन्निधापयितुं वा समर्था इत्यनर्थकानि तन्मयानि यन्त्राणि इत्युक्तम् । तन्नोच्यते । यथा भूबीजाङ्कुरतद्रूपमध्यवन्धवन्धस्यविराट्संज्ञ (?) चतूरूपं

नत्तत्क्रमेण परापश्यन्ती मध्यमा वैखरीतिभेदेन (?) चतुर्विधाया वाचां वाच्यम् । यथा च तरौ स्कन्धशाखादिकं फलानि शलाटवश्चैवं विराजि तत्त्वं वियदादि जडरूपं देवतावर्गो जीववर्गश्च । तथाकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति विराट्वाचिनो-ऽकारस्य तत्त्ववाङ्मयत्वं श्रुतमिति यावान् वाच्यो व्यूहस्तावान् वाचक-व्यूहोऽपि वाग्विभूतिरूपः । तथाच श्रुतिः । यावद्ब्रह्मविष्ठितं तावती वागिति । एवं सति संख्यावाचिनोऽप्यङ्काः संख्येयं देवतादिसङ्घं वा देवता-वाचि यद्वयवभूतवर्णसङ्घं वाभिदधति । दृष्टश्चैतल्लोकवेदयोर्यंत्सङ्ख्यानां संख्यावाचित्वम् । तथाद्यं भूमिर्यमावश्विनौ वेदा वर्णा रसाः ऋषयो गजा ग्रहाः दिशो वस्वादित्या विश्वे मनवस्तिथयः कला इति सङ्ख्याता-मेकत्वादि(?)संख्यावाचित्वं ज्योतिषे छन्दोविचित्यां च प्रसिद्धम् । तथा द्वितीय-मपि ज्योतिष्टोमे द्वादशशतं दक्षिणा इत्येन सहस्रदक्षिणेन यजेतेत्यादौ संख्यया वेदगवादिकमेवाभिधीयते न लोकसुवर्णादि ।

एवमेकपादे विनिश्चित्य चीश्चतुर्भिर्वशीकुरु ।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥
एकायनोऽसौ द्विपदस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा ।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विख(?) गोऽत्यादिश्च इत्यादौ ॥

एकादिशब्दैर्बुद्धीश्वरादिसत्त्वाभिधानाच्च प्रसिद्धम् । न च संख्यायाः संख्येय-विशेष्यवाचित्वेनेयमर्थलक्षणा दोषः । ईश्वरसंकेतप्रकृष्टार्थत्वात् । स्वं सङ्केत-प्रकृष्टार्थं नेयार्थमिति भण्यत इत्याकरे आधुनिकसंकेतप्रकृष्टार्थस्यैव नेयार्थ-त्वाभिधानात् । ईश्वरसङ्केतप्रकृष्टार्थत्वमेषां एकस्मै स्वाहा द्वाभ्यां स्वाहेति चतुर्थ्यां संख्यावाचिनां शब्दानां देवतावाचित्वावगमादङ्कयन्त्रप्रज्ञापकमन्त्र-लिङ्गाच्चावगम्यते । तथाहि श्रूयते ।

दातव्यं षड्विंशांश्चतुरः कल्पयन्तो ऋग्यंषि च दधत आद्वादशम् ।
यज्ञं विमाय कवयो मनीषा ऋक्सामाभ्यां रथं प्रवर्तयन्ति ॥

अस्यार्थः । कवयो यज्ञं विमा ऋक्सामाभ्यां रथं प्रवर्तयन्तीत्यन्वयः । कवय आन्तर्दर्शिनः । यज्ञं य इति कादि नव टादि नव पादि पञ्च याद्यष्टा-विंशत्यागमप्रसिद्धरीत्या य एक उच्यते । ज्ञ इति जकारञकारयोर्योगे च ज्ञ श्रुतत्वात् । शून्यवाची ञकारो ऽर्थकः तेन ञ इत्यष्टावुच्यन्ते । तामिमां अङ्कसंख्या विमापविधेन रूपेण मीत्वा एकोऽष्टौ सप्त-द्वि-त्रि-षट्-पञ्च-चत्वारि, इत्येवं क्रमेण संख्याया ऋक्सामाभ्यां । ऋक्सामच ऋक्सामच्चेति समाहार-

योरैकयोषः । स्वकोष्ठात् तृतीयया पंक्त्या तृतीयेन च कोष्ठेन सह रयं अक्षयमन्त्राख्यं उपासनायन्त्रं प्रवर्त्तयन्तीत्यर्थः । मनीषा मनीषया । षोडश-कोष्ठयन्त्रे यथैकादशाङ्को प्रथमद्वितीयकोष्ठयोस्ते भवतस्तर्हि तृतीयपंक्तेस्तृतीय-चतुर्थकोष्ठयोर्वाञ्छार्थपूरणाङ्को लेख्यौ ।

वाञ्छा तदर्थं स्फुटयति ... ... ... ... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... (पञ्चयामन्तरं) ... ... ...

......... तदेवं वर्णपदादीनामिवाङ्कानामभिधायकत्वात् ॐमित्येतदक्षर-मिदं सर्व्वमिति दर्शनेन वाच्यवाचकशब्दभेदाभिधानात् । उक्तरीत्या प्रत्यक्षं श्रुतिमूलकान्यङ्कयन्त्राण्यपि स्वाभिधेय-देवतासन्निधायकत्वात् तान्यपि व्याख्येयानि । साधकैः सर्व्वसिद्धार्थमादरणीयानि चेति सिद्धमतो युक्तैवेयं प्रतिज्ञा यन्त्रावलीमङ्कमयीं व्याकुर्म्मह इति ॥ इत्यादि ।

---

## INDEX OF AUTHORS.

नामानि । ... पत्रे ।